॥ अर्हम् ॥

न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरिभ्यो नमः ।

नवाङ्गवृत्तिकारश्रीमदभयदेवसूरिशिष्यश्रीहरिचन्द्रगणिविरचितः

# प्रश्नपद्धतिनामा ग्रंथः ।



॥ ॐ नमः सिद्धम् ॥ श्रीमद्दशवैकालिके-" हत्थगं संपमज्जिता " इत्यत्र हस्तकशब्देन किं ? तत्राह—हस्तकशब्देन मुखवस्त्रिकोपकरणविशेषः, यदुक्तं विद्वद्भिः-" सोलसंगुलदीहं, विच्छिन्नाणि होंति [ णांत ] । इत्थगताणुगमणं, तं नेपच्छं पवत्तेण ॥ १ ॥" इत्यत्र षट्दशाङ्गुलप्रमाणकथनान्मुखवस्त्रिका [ ज्ञातव्या ] ॥ १ ॥

प्रथमाङ्गे पापाधिकारे " न रणिज्जा न घोट्टज्जा " इति प्रोक्तं तत्कथं पात्रेषु रञ्जनादिस्थितिः ? तत्राह—शोभनदर्शनार्थबुद्ध्या निषिद्धम् । रञ्जनादिप्रवृत्तिस्तु सचित्तादिदोषपरिहारार्थम् । तत्तु निर्ग्रन्थैः गीतार्थैरालोचनीयम् । वस्त्रमप्येवमेवेति ॥ २ ॥

विचित्रवर्णपात्रकरणे किं प्रयोजनम् ? तत्राह—जगति पञ्चवर्णजन्तूत्पत्तिर्दृश्यते तद्दर्शनार्थं विचित्रवर्णपात्रं जिनैः कारितम् । श्वेतजीवो रक्तवर्णं याति तदा चक्षुषा सम्यग्दृश्यत इत्यादीति ॥ ३ ॥

श्रीमद्भगवत्यां कृतानशनसाधोः क्षुधा लग्ना तदा कृताशने कथं तस्याराधकत्वम् ? तत्राह—कृताहारे पुनरनशनमेव संभाव्यते, भुक्त्वा गतमूर्च्छः सन् पुनरनशनं करोति तदाराधकत्वं लभते । तत्त्वं तु विदन्ति बहुश्रुता इति ॥ ४ ॥

पुनः प्रज्ञप्त्यां स्कन्धकाधिकारे प्रश्नकर्ता श्रमणो वा उपासकः ? तत्राह—स तु श्रमणो न तूपासकः । तत्तु मद्गुरुणा तद्वृत्तौ समर्थितमस्ति [ इति ] सूक्ष्मबुद्ध्यावलोकनीयमिति ॥ ५ ॥

कुशिष्यजमालेः कतिभवग्रहणम् ? तत्राह—पञ्चदशभवग्रहणानन्तरं सेत्स्यति । केषाञ्चित्केवलिप्रज्ञप्तधर्माशातनकारकाणां विंशद्भ(विंशतिभ)वग्रहणं कथं जमालेः पञ्चदश ? इति सत्यम्, परं क्रियाप्राधान्यान्नारकाभावे देवमनुष्यतिर्यक् ( तिरश्चां ) पञ्च पञ्च पञ्च इति ॥ ६ ॥

कृष्णश्रेणिकौ क्षायिकौ क्षायोपशमिकौ [वा]? तत्राह—क्षायिकौ । तदा कथं नरक उत्पादः ? इति सत्यम्, परं बद्धायुष्कत्वाधारकत्वमिति ॥ ७ ॥

विराधकस्योत्कृष्टतः प्रथमदेवलोक उत्पादः सूत्रे प्रसिद्धः कथं सुखमालासाध्व्या ईशाने गतिः ? तत्राह—मूलसंयमविराधिनः प्रथमे

चारणश्रमणरूपेणेना लवणाब्धिवेला स्पृशति, न वा? तत्राह—सप्तदशसहस्रयोजनान्यूर्ध्वं गत्वा ...... पतति, वेला तु षोडशयोजन [ सहस्र ] प्रमाणैव, तस्मान्न स्पृशति जलमिति ॥ ६ ॥

श्रीमद्व्यवहारसूत्रे प्रोक्तं—" सयंसि या कमढगंसि " [ सि ] तत्कमढकशब्देन किमुच्यते? तत्राह—पृथुलग्रीवा लम्बोदरं चतुरङ्गुलयुक्तं भाजनं वरकमर्दकम्, यदुक्तं वृद्धैः—" पहुलत्तं मुहउयरं, मज्झे गंभीर उयरसंजुत्तं। अहे ठवणट्ठ चउप्पया, सो कमढं भण्णए मुणी ॥ १ ॥ " प्रवर्णीति लोकोक्त्येति ॥ १० ॥

सनत्कुमारचक्रवर्तिरत्नक्रिया तृतीयाङ्गे प्रोक्ता कथं स्वर्गे उत्पादः कथ्यते? तत्राह—महुरुणा तद्वृत्तौ लिखितं " मेत्तय-मालन्वाग्निदः, मज्झमाले मडे " इत्यादि पञ्चमाङ्गवचनवदिति ॥ ११ ॥

अशुद्धदाने दातुरल्पायुष्कता प्रोक्ता कथमष्टमशतेऽल्पपापबहुतरनिर्जरा कथिता? सर्वज्ञवाक्ये कथं विरोधः? तत्राह—अनुपासितगुरोर्वचनमिदम्, कुतः? उत्सर्गापवादरूपाणि जिनवचनानि। उत्सर्गतो निषिद्धं, तस्यैवापवादतो विधिः, " संथरणम्मि असुद्धं " इत्यादिगाथाप्रामाण्यात्। पञ्चमाङ्गवृत्तौ महुरुणानिमन्यग्विधिना विवेचनं कृतमस्ति। न तु जिन-वचनविरोधः " अविरोहवाइ अरिहंता " इति वचनादिति ॥ १२ ॥

कालिन्द्याः पूत्रमरणं वीरेण कथं निवेदितम्? तस्या मूर्च्छनादिदोषा जातास्तत्र वीरवाक्यमेव निबन्धनम्, तत्राह—आगमव्यवहारित्वादनागतचारित्रगुणोत्पादनार्थं प्रोक्तम्, न तु वीरस्य श्रुतव्यवहारे प्रवृत्तिरिति ॥ १३ ॥

व्यवहारसूत्रे नवदीक्षितशिष्याणां सूत्रार्थपाठने कालावधिः प्रोक्ता, कथं धन्नकादिमुनीनां स्वल्पकालेनैकादशाङ्गानि पाठितानि ? तत्राह—दशमपूर्वं यावदागमव्यवहारप्रवृत्तिः, ततः श्रुतव्यवहाररीत्या विधिः । तेषामागमव्यवहाररीत्या-ध्यापितान्यङ्गानि । व्यवहारे तु श्रुतव्यवहारप्रवृत्तिस्ततः कालमर्यादा विहिता । आगमव्यवहारे सति न श्रुतव्यवहारप्रवृत्ति-यादि व्यवहाराणां पञ्चमाङ्के विस्ताराधिकार इति ॥ १४ ॥

मनुष्यभवतो मृत्वा चक्रवर्तिर्न जायते, कथं वीरजीवो मनुष्यगतिं त्यक्त्वा विदेहे चक्रवर्तिर्जातः ? तत्राह—तदा त: ... जातम् । वसुदेवहिण्डौ मनुष्यभवतस्तीर्थङ्करोऽपि दृश्यते तद्वदिति ॥ १५ ॥

हरिभद्रसूरिशिष्यौ साधुलिङ्गं परावर्तितं तस्मिन्नेव मृतौ तयोराराधकता वा न ? तत्राह—आराधकतैव । यो प्रोक्तं निष्कारणे लिङ्गं परावर्त्तयति तस्य लिङ्गकुशीलता न तु कारणे, तयोः कारणतः कृत इति ॥ १६ ॥

...च्छेदनं कृतं तस्य कालकसूरेः प्रायश्चित्तं न वा ? तत्राह—प्रशस्त्यां प्रोक्तम् "सङ्घादिकार्ये चक्रवर्त्यादीनपि चूर्णयेत् ... संयममलीनता न तु सर्वतः" एतद्वचनाज्ज्ञायते किञ्चिच्चारित्रमलीनता कालकसूरेर्न तु दर्शनमलीनता । ...नाराणि शोधयित्वा पुनर्निर्मलीभूत इति ॥ १७ ॥

नन्दीसूत्रं देववाचकगणिना कृतं तदा कथं प्रशस्त्यां ज्ञानाधिकारे—" जहा नंदीए " इत्युक्तम् ? तत्राह—" जहा ...दीए " । ...

गाथाप्रामाण्याद्वा ॥ २५ ॥

महानिशीथे कमलप्रभसूर्यधिकारे जिनवचनान्यथाप्ररूपकस्यानन्तभवभ्रमणं प्रोक्तम्, कथं जमालिः पञ्चदश भवे सेत्स्यति ? तत्राह—पञ्चदश जीवाः सिध्यन्ति ईदृशी क्रिया जमालेर्दृढमुग्राच्छ्रयते तर्हि तद्भवे मुक्तिर्युज्यते तस्य, परं ज्ञानिना निश्चयनये दृष्टमस्य पञ्चदश भवा भाविनः, तेन हेतुना पुनर्मिथ्यात्वमापन्नस्तेनोक्तभवाः शेषाः। अन्यथावादिनस्त्वनन्तभवभ्रमणमेव कमलप्रभादिवदिति ॥ २६ ॥

स्त्रिया गर्भग्रहणशक्तिरेकस्मिन्मासे कत्यहोरात्रि यावत् ? तत्राह—ऋतुसमयार्वाकगताहर्निशा यावदेतावदेवस्त्रियं एतावत्क ( त्कालं ) कमलमुकुलितं स्यात्, मध्यदिनेषु मंडलमुग्रम्। अन्यवसरे तु दिनत्रयं यावत्कमलनालस्रवणाचस्य मलीनता। तस्मादेकस्मिन्मासे चतुर्दशाहोरात्राणि गर्भग्रहणयोग्यानि। परं कानिचिद्धरति कानिच्च वेति ॥ २७ ॥

गोशालको भगवता दीक्षितो न वा ? तत्राह—प्रज्ञप्त्यामुक्तम्—"मया दीक्षितं पाठितं प्रव्राजितम्" इत्यादिवचनेन ज्ञायते मुण्डितः। वसुदेवहिण्डे तु वीरचरित्राधिकारे प्रोक्तं भगवता सह लग्नम्, तत्र न मुण्डनाधिकारः। तत्त्वं तु जानन्ति बहुश्रुता इति ॥ २८ ॥

समवसरणे भगवद्दर्शनतः कथं देवानन्दायाः पयोधरयुगं सिक्तं ? तत्राह—यथा स्वप्ने पुरुषस्त्रीसंयोगे पुरुषचिह्न-

## अथ प्रश्नपद्धतिग्रन्थोत्तरार्द्धः ।

कस्मिँल्लोके मेरुः ? तत्राह—सहस्रयोजनप्रमाणो मेरुरधः, अष्टादशशतयोजनानि तिरश्चीने, शेषस्तूर्ध्वलोके ततः त्रिलोकस्थो मेरुरिति वक्तव्यमिति ॥ १ ॥

मेरोश्छाया कस्मिन् स्थाने पतति ? तत्राह—मेरोच्छायाया एवाभावः, कथम् ? द्विशताधिकसप्तनवतिसहस्रयोजनानि मेरोरुच्चत्वम्, चक्रत(चंक्रान्त)स्तदा सूर्याचन्द्रमसौ स्त्रियाः पादाभरणवन्नीचैस्तरौ मेरुं न प्रकाशयतः । स्वयमेव त्रिविधरत्नाभया भान्तीति ॥ २ ॥

सूर्याचन्द्रमसौ सदैव गगनेऽस्तः कथं सूत्रकारेण—" उग्गए सूरे " इत्युक्तम् ? तत्राह—चर्मचक्षुषा लोकैर्दृष्टौ तदा लोका वदन्त्युद्गतौ सूर्याचन्द्रमसौ, यदा तु चक्षुर्गोचराभावो जातस्तदा वदन्त्यस्तंगताविति लोकोक्त्या सूत्रकारेण प्रोक्तमिति ॥ ३ ॥

यथोपशममस्य बद्धवतामनन्तानुबन्धिक्रोधादयः चयं गताः त्रिगुणा मोहनीना पशमं . तः कथं जीवो [illegible]

भवति तदा तद विश्रामाने तद्वत्कर्म मोहनीय [ श्रपिता ] कष्टान् भवान्, अथवाऽस्य स्थान गमनस्य ... ॥ ५ ॥

सूर्येन्दू यदा राहुर्गृह्णाति तदाध्ययनं सूत्रस्य कथं न स्यात् ? तत्राह—तस्मिन् प्रस्तावे तन्मतिमार्गं मिथ्यादृष्टिनो देवा मनुष्यलोके भ्रमन्तः पठन्तं दृष्ट्वोपद्रवन्ति ततो निषिद्धमार्षैरिति ॥ ६ ॥

सिद्धकामो जिनः कस्मै देशनामभिधत्ते ? तत्राह—वचनाद्युपयोगार्थं परोपकाराय चेति ॥ ७ ॥

परमाणूनामष्टौ वर्गणा कथं कृता ? तत्राह—यथा कस्यचिद्गृहपतेर्बहूनि गोवर्गाणि, तदा गोवाः परस्परं विरोधं कुर्वन्ति तदा तत्स्वामिना रक्तपीतादिवर्णविभेदेन वर्गाणि कृत्वा गोपेभ्यो दत्तानि, तदा स्वकीयं स्वकीयं वर्गं चारयन्ति तद्वत्परमाणुषु तत्परीक्षकाणां विरोधनाशाय जिनपतिनाष्टौ वर्गणाः पृथक् पृथग्दर्शिता इति ॥ ८ ॥

पादपोपगमनानशने स्पन्दनाभावः कथं " उच्चारपासवणभूमी पडिलेहइ " इति ग्रन्थकृता प्रोक्तम् ? तत्राह—आगाढ-[नश] ततो यदि परिष्ठापयति तस्मै भूमीप्रतिलेखना गदिता, तत्तु मद्गुरुणा स्कन्धकाधिकारे निगदितमस्ति प्रज्ञप्त्यामिति ॥ ९ ॥

मा व्युत्थापकं जमालिं जानतापि कथं भगवता दीक्षितः ? तत्राह—तस्यार्थेऽन्येषां केषांचिज्जीवानामुद्धारो ज्ञातः । अथवा यावच्चारित्रं पालयिष्यति तावदेव फलम् । अथवा भाविभावत्वादिति ॥ १० ॥

नारकभवं त्यक्त्वा नैरयिको न भवति कथं " णेरइए णेरइएसु गच्छइ णो अणेरइए " इत्युक्तम् ? तत्राह—आयुष्का-

पेयया योप्यम्, नरकायुष्कं बद्ध्वा नारकेनोत्पन्नः, ततः 'उत्पद्यमान उत्पन्नः' इति वचनात् वाञ्छितगतितो मृत्वाऽध्वनि गच्छन् नारक एव प्रोच्यते, तत उक्तं सूत्रे, न तु नारकभवान्नरक उत्पाद इति ॥ ११ ॥

जीवोऽप्यूर्ध्वगतिरेव कथमधस्तने याति ? तत्राह—यथा तुम्बफलस्य जलोपरि तरणस्वभाव एव, परं मृत्तिकादिलेपसंयोगाज्जलाधस्तने भागे गच्छति तद्वत्कर्मलेपभारेणाधस्तनं यातीति ॥ १२ ॥

कर्मजीवयोः कथं संबन्धो जातः ? तत्राह—अनादित्वात् सर्वज्ञोऽपि न कथयितुमलमिति ॥ १३ ॥

चत्वारि ज्ञानानि विद्यन्ते कथं गौतमोऽप्युत्तरदान आनन्दपार्श्वे स्खलितः ? तत्राह—अदत्तोपयोगत्वात्। अथवा प्रकर्षविनययुक्तत्वेन भगवन्तं प्रक्ष्यामीति बुद्ध्या नोपयोगो दत्त इति ॥ १४ ॥

"मज्जं वा मंसं वा भोच्चा वा पिच्चा वा" इत्यस्य कोऽर्थः ? तत्राह—छेदाभिप्रायत इदं सूत्रं ज्ञेयम्। कर्मवशाद्विचित्रगतिमन्तः साधवो भवन्ति, अत्र नाश्चर्यं, प्रायश्चित्ताच्छुध्यति, परमेतदकथनीयमिति ॥ १५ ॥

श्रुतकेवलिनो वचनं केवलिवत्प्रोक्तं तत्कथम् ? तत्राह—उपयुक्तः श्रुतकेवली वदत्। अनुपयुक्तस्त्वन्यथापि वक्ति गौतमवदिति ॥ १६ ॥

पार्श्वस्थसंघाट्यं निशीथे नि : ... शीलकस्य कृत ? तत्राह—आचार्यत्वात्कदाचित्प्रमादं त्यक्त्वा

